1.1.58.2.2 द्विर्वचनविधिः द्विर्वचनविधिम् प्रति न स्थानिवत् भवति । [दध्यत्र । मध्वत्र ।] यणादेशः परनिमित्तकः । तस्य स्थानिवद्भावात् अनचि च इति धकारस्य द्विर्वचनम् न स्यात् । अस्मात् वचनात् भवति ।

1.1.58.2.3 वरेविधिः [वरे] यः अजादेशः सः पूर्वविधिम् प्रति न स्थानिवत् भवति । अप्सु यायावरः प्रवपेत पिण्डान् । यातेः यङन्तात् यः च यङः इति वरचि कृते [अतः लोपः परनिमित्तकः] । तस्य स्थानिवत्त्वात् आतः लोपः इटि च इति आकारलोपः स्यात् अस्मात् वचनात् न भवति ।

1.1.58.2.4 यलोपविधिः यलोपविधिम् प्रति अजादेशः न स्थानिवत् भवति । कण्डूतिः । कण्डूयतेः क्तिनि कृते अतः लोपः परनिमित्तकः लोपः व्योः वलि इति यलोपे स्थानिवत् स्यात् अस्मात् वचनात् न भवति ।

1.1.58.2.5 स्वरविधिः स्वरविधिम् प्रति अजादेशः न स्थानिवत् भवति । चिकीर्षकः । जिहीर्षकः । ण्वुलि कृते अतः लोपः परनिमित्तकः लिति प्रत्ययात् पूर्वम् उदात्तम् इति स्वरे कर्तव्ये न स्थानिवत् भवति इति ।

1.1.58.2.6 सवर्णविधिः सवर्णविधिम् प्रति अजादेशः न स्थानिवत् भवति । [शिण्ढि । पिण्ढि ।] [शिषेः पिषेः] च लोण्मध्यमपुरुषैकवचने रुधादिभ्यः श्नम् । हित्वधित्वष्टुत्वजश्त्वेषु कृतेषु श्नसः अल्लोपः क्ङिति सार्वधातुके परनिमित्तकः अनुस्वारस्य ययि परसवर्णे कर्तव्ये न स्थानिवत् भवति ।

1.1.58.2.7 अनुस्वारविधिः अनुस्वारविधिम् प्रति अजादेशः न स्थानिवत् भवति । शिंषन्ति । [पिंषन्ति] । नः च अपदान्तस्य झलि इति अनुस्वारे कर्तव्ये श्नसोः अल्लोपः न स्थानिवत् भवति ।

1.1.58.2.8 दीर्घविधिः दीर्घविधिम् प्रति अजादेशः न स्थानिवत् भवति । प्रतिदीव्ना । प्रतिदीव्ने । प्रतिदिवन् इति एतस्य भस्य इति अधिकृत्य तृतीयैकवचने चतुर्थ्येकवचने च अल्लोपः अनः इति अकारलोपः

परनिमित्तकः । तस्य स्थानिवद्भावात् हलि च इति दीर्घत्वम् न स्यात् न हि अयम् वकारः हल्परः इति । अस्मात् वचनात् भवति ।
1.1.58.2.9 जश्विधिः जश्विधिम् प्रति अजादेशः न स्थानिवत् भवति । [सग्धिः] च मे सपीतिः च मे । [बब्धाम्] ते हरी धानाः । अदेः क्तिनि बहुलम् छन्दसि इति घस्लादेशः । घसिभसोः हलि च इति उपधालोपः । झलः झलि इति सकारलोपः । झषः तथोः धः अधः इति धत्वम् । उपधालोपस्य स्थानिवत्त्वात् झलाम् जश् झशि इति घकारस्य जश्त्वम् न स्यात् । अस्मात् वचनात् भवति । समाना ग्धिः । समानस्य सभावः । सग्धिः । बब्धाम् इति : भसेः लोड्द्विवचने शपः श्लुः द्विर्वचनम् अभ्यासकार्यम् घसिभसोः हलि च इति उपधालोपः झलः झलि इति सकारलोपः झषः तथोः धः अधाः इति धत्वम् । उपधालोपस्य स्थानिवत्त्वात् झलाम् जश् झशि इति जश्त्वम् न स्यात् । अस्मात् वचनात् भवति ।
1.1.58.2.10 चर्विधिः चर्विधिम् प्रति अजादेशः न स्थानिवत् भवति । जक्षतुः । जक्षुः । अक्षन् पितरः अमीमदन्त पितरः । लिड्द्विवचनबहुवचनयोः अदेः घस्लादेशः । गमहनजनखनघसाम् लोपः क्ङिति अनङि इति उपधालोपः द्विर्वचनम् अभ्यासकार्यम् । तत्र उपधालोपस्य स्थानिवत्त्वात् खरि च इति घकारस्य चर्त्वम् न स्यात् । अस्मात् वचनात् भवति । शासिवसिघसीनाम् च इति षत्वम् । अक्षन् इति : अदेः लुङ्बहुवचने घस्लादेशः च्लेः आगतस्य मन्त्रे घसह्वर इति लुक् । गमहनजनखनघसाम् लोपः क्ङिति अनङि इति उपधालोपः तस्य स्थानिवत्त्वात् खरि च इति चर्त्वम् न स्यात् । अस्मात् वचनात् भवति ।
1.1.58.3 स्वरदीर्घयलोपेषु लोपाजादेशः न स्थानिवत् भवति । अन्यत्र स्थानिवत् एव । तेन [बहुखट्वकः किर्योः गिर्योः वाय्वोः] इति स्थानिवत्त्वात् स्वरदीर्घयलोपाः न भवन्ति ।

**द्विर्वचने अचि । (1.1.59/2243)**

1.1.59.1 द्विर्वचननिमित्ते अचि अजादेशः स्थानिवत् भवति [द्विर्वचने एव कर्तव्ये[ । [रूपातिदेशः च अयम् नियतकालः] । तेन कृते द्विर्वचने [पुनः आदेशरूपम् एव अवतिष्ठते]।

1.1.59.2.1 आल्लोपोपधालोपणिलोपयणयवायावादेशाः प्रयोजनम्। आल्लोपः पपतुः। पपुः। आतः लोपः इटि च इति आकारलोपे कृते तस्य स्थानिवद्भावात् एकाचः द्वे प्रथमस्य इति द्विर्वचनम् भवति।

1.1.59.2.2 उपधालोपः जघ्नतुः। जघ्नुः। गमहनजनखनघसाम् लोपः क्ङिति अनङि इति उपधालोपे कृते अनच्कत्वात् द्विर्वचनम् न स्यात् अस्मात् वचनात् भवति।

1.1.59.2.3 णिलोपः [आटिटत्]। अटतेः णिचि लुङि चङि णिलोपे कृते तस्य स्थानिवत्त्वात् [अजादेः द्वितीयस्य इति] टिशब्दस्य [द्विर्वचनम्] भवति।

1.1.59.2.4 यण् चक्रतुः । चक्रुः । करोतेः अतुसि उसि च यणादेशे कृते अनच्कत्वात् द्विर्वचनम् न स्यात् स्थानिवत्त्वात् भवति।

1.1.59.2.5 अयवायावादेशाः निनय [निनाय]। लुलव लुलाव। नयतेः लुनातेः च उत्तमे णलि गुणे कृते वृद्धौ च अयवायावादेशाः। तेषाम् स्थानिवत्त्वात् ने नै लो लौ इति द्विर्वचनम् भवति।

1.1.59.3 द्विर्वचने कर्तव्ये इति किम्। जग्ले मम्ले। श्रवणम् आकारस्य न भवति । द्विर्वचननिमित्ते इति किम् । दुद्यूषति । [ऊठि यणादेशः न स्थानिवत्] भवति। अचि इति किम्। जेघ्रीयते देध्मीयते। ईघ्राध्मोः यङि च इति ईकारादेशः तस्य स्थानिवद्भावात् आकारस्य द्विर्वचनम् स्यात् । अज्ग्रहणात् न भवति।

**अदर्शनम् लोपः । (1.1.60/53)**

1.1.60.1 <u>अदर्शनम्</u> [अश्रवणम् अनुच्चारणम् अनुपलब्धिः अभावः वर्णविनाशः इति <u>अनर्थान्तरम्</u>]। <u>एतैः शब्दैः</u> [यः अर्थः अभिधीयते तस्य लोपः इति इयम् सञ्ज्ञा भवति] । <u>अर्थस्य इयम् सञ्ज्ञा</u> [न शब्दस्य] । प्रसक्तस्य [अदर्शनम् लोपसञ्ज्ञम् भवति]।

1.1.60.2 गोधायाः ढ्रक् [<u>गौधेरः । पचेरन्</u>] । जीवे रदानुक् [<u>जीरदानुः</u>] । स्रिवेः मनिन् [<u>आस्रेमाणम्</u>] । यकारवकारयोः अदर्शनम् इह उदाहरणम् । [<u>अपरस्य अनुबन्धादेः</u>] प्रसक्तस्य।

1.1.60.3 लोपप्रदेशाः लोपः व्योः वलि इति एवमादयः।

**प्रत्ययस्य लुक्श्लुलुपः । (1.1.61/260)**

1.1.61.1 अदर्शनम् इति वर्तते । प्रत्ययादर्शनस्य लुक् श्लु लुप् इति एताः सञ्ज्ञाः भवन्ति । <u>अनेकसञ्ज्ञाविधानात् च</u> [तद्भावितग्रहणम् इह विज्ञायते । लुक्सञ्ज्ञाभावितम् प्रत्ययादर्शनम्] लुक्सञ्ज्ञम् भवति श्लुसञ्ज्ञाभावितम् श्लुसञ्ज्ञम् भवति लुप्सञ्ज्ञाभावितम् लुप्सञ्ज्ञम् भवति । तेन सञ्ज्ञानाम् सङ्करः न भवति। <u>विधिप्रदेशेषु च</u> [भाविनी सञ्ज्ञा विज्ञायते]।

1.1.61.2 [<u>अत्ति । जुहोति । वरणाः</u>]।

1.1.61.3 [प्रत्ययग्रहणम् किम्। <u>अगस्तयः । कुण्डिनाः</u>।]

1.1.61.4 लुक्श्लुलुप्प्रदेशाः लुक् तद्धितलुकि जुहोत्यादिभ्यः श्लुः जनपदे लुप् इति एवमादयः।

**प्रत्ययलोपे प्रत्ययलक्षणम् । (1.1.62/262)**

1.1.62.1 <u>प्रत्ययनिमित्तम्</u> [कार्यम् असति अपि प्रत्यये कथम् नु नाम स्यात् इति सूत्रम् इदम् आरभ्यते] । प्रत्ययलोपे कृते <u>प्रत्ययलक्षणम्</u> प्रत्ययहेतुकम् कार्यम् भवति।

1.1.62.2 [अग्निचित्] सोमसुत् [अधोक्] इति अत्र सुप्तिङोः लुप्तयोः सुप्तिङन्तम् पदम् इति पदसञ्ज्ञा भवति। अधोक् इति दुहेः लङि तिपि शब्लुकि तिलोपे घत्वभष्भावजश्त्वचर्त्वेषु कृतेषु रूपम्।

1.1.62.3 प्रत्ययः इति [वर्तमाने] पुनः प्रत्ययग्रहणम् किम्। कृत्स्नप्रत्ययलोपे यथा स्यात्। इह मा भूत् [आघ्नीय। सङ्ग्मीय]। हनिगम्योः लिङात्मनेपदे लिङः सलोपः अनन्त्यस्य इति सीयुट्सकारलोपः प्रत्ययैकदेशलोपः तत्र प्रत्ययलक्षणेन झलि इति अनुनासिकलोपः न भवति। प्रत्ययलक्षणम् इति किम्। रायः कुलम् रैकुलम्। गवे हितम् [गोहितम्]। आयवादेशौ न भवतः वर्णाश्रयत्वात्।

**न लुमता अङ्गस्य। (1.1.63/263)**

1.1.63.1 पूर्वेण अतिप्रसक्तम् प्रत्ययलक्षणम् इति विशेषे प्रतिषेधः उच्यते। लुमता शब्देन [लुप्ते प्रत्यये] यत् अङ्गम् तस्य [प्रत्ययलक्षणम् कार्यम् न भवति]।

1.1.63.2 [गर्गाः। मृष्टः। जुहुतः]। [यञ्शपोः लुमता लुप्तयोः अङ्गस्य वृद्धिगुणौ न भवतः]।

1.1.63.3 लुमता इति किम्। [कार्यते]। हार्यते। अङ्गस्य इति किम्। [पञ्च। सप्त। पयः। साम]।

**अचः अन्त्यादि टि। (1.1.64/79)**

1.1.64.1 [अचः] इति [निर्धारणे] षष्ठी। जातौ एकवचनम्। अचाम् सन्निविष्टानाम् यः [अन्त्यः] अच् तदादि शब्दरूपम् टिसञ्ज्ञम् भवति।

1.1.64.2 [अग्निचित् इच्छब्दः]। सोमसुत् उच्छब्दः। [आताम् आथाम् आम्शब्दः। पचेते पचेथे]।

1.1.64.3 टिप्रदेशाः टितः आत्मनेपदानाम् टेः ए इति एवमादयः।

**अलः अन्त्यात् पूर्वः उपधा। (1.1.65/249)**

1.1.65.1 [धात्वादौ वर्णसमुदाये] अन्त्यात् अलः पूर्वः यः वर्णः सः अल् [एव] उपधासञ्ज्ञः भवति।

1.1.65.2 [पच् पठ्] अकारः। [भिद् छिद् इकारः। बुध् युध् उकारः। वृत् वृध् ऋकारः]।

1.1.65.3 अलः इति किम्। [शिष्टः] शिष्टवान्। समुदायात् [पूर्वस्य मा भूत्]।

1.1.65.4 उपधाप्रदेशाः अतः उपधायाः इति एवमादयः।

**तस्मिन् इति निर्दिष्टे पूर्वस्य। (1.1.66/40)**

1.1.66.1 तस्मिन् इति सप्तम्यर्थनिर्देशे पूर्वस्य एव कार्यम् भवति न उत्तरस्य।

1.1.66.2 [इकः यण् अचि दध्युदकम्]। मध्विदम्। पचत्योदनम्।

1.1.66.3 निर्दिष्टग्रहणम् [आनन्तर्यार्थम्]। अग्निचित् अत्र इति [व्यवहितस्य मा भूत्]।

**तस्मात् इति उत्तरस्य। (1.1.67/41)**

1.1.67.1 [निर्दिष्टग्रहणम् अनुवर्तते]। तस्मात् इति पञ्चम्यर्थनिर्देशे उत्तरस्य एव कार्यम् भवति न पूर्वस्य।

1.1.67.2 तिङ् अतिङः ओदनम् पचति। इह न भवति पचति ओदनम् इति।

**स्वम् रूपम् शब्दस्य अशब्दसञ्ज्ञा। (1.1.68/25)**

1.1.68.1 शास्त्रे [स्वम् एव रूपम् शब्दस्य ग्राह्यम् बोध्यम् प्रत्याय्यम् भवति न बाह्यः अर्थः शब्दसञ्ज्ञाम् वर्जयित्वा]। शब्देन अर्थावगतेः अर्थे कार्यस्य असम्भवात् तद्वाचिनाम् शब्दानाम् सम्प्रत्ययः मा भूत् इति सूत्रम् इदम् आरभ्यते।

1.1.68.2 [अग्नेः ढक्  आग्नेयम्] अष्टाकपालम् निर्वपेत् । अग्निशब्दः अग्निशब्दस्य एव ग्राहकः भवति न ज्वलनः पावकः धूमकेतुः इति । न अतः प्रत्ययः भवति । उदश्वितः अन्यतरस्याम् [औदश्वित्कम्] । औदश्वितम् । तक्रम् अरिष्टम् कालशेयम् दण्डाहतम् मथितम् इति न अतः प्रत्ययः भवति ।

1.1.68.3 अशब्दसञ्ज्ञा इति किम् । दाधा घु अदाप् तरप्तमपौ घः घुग्रहणेषु [घग्रहणेषु च सञ्ज्ञिनाम् ग्रहणम् न सञ्ज्ञायाः] ।

1.1.68.4.1 सित् तद्विशेषाणाम् [वृक्षाद्यर्थम्] । सिन्निर्देशः कर्तव्यः । ततः वक्तव्यम् [तद्विशेषाणाम् ग्रहणम् भवति इति] । किम् प्रयोजनम् । वृक्षाद्यर्थम् । विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशु-शकुन्यश्ववडवपूर्वापराधरोत्तराणाम् इति प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः ।

1.1.68.4.2 [पित् पर्यायवचनस्य च स्वाद्यर्थम्] । पिन्निर्देशः कर्तव्यः । ततः वक्तव्यम् पर्यायवचनस्य ग्रहणम् भवति चकारात् स्वस्य रूपस्य तद्विशेषाणाम् च इति । किम् प्रयोजनम् । स्वाद्यर्थम् । स्वे पुषः । स्वपोषम् पुष्टः । रैपोषम् । धनपोषम् । अश्वपोषम् । गोपोषम् ।

1.1.68.4.3 जित्पर्यायवचनस्य एव राजाद्यर्थम् । जिन्निर्देशः कर्तव्यः । ततः वक्तव्यम् पर्यायवचनस्य एव ग्रहणम् भवति इति न स्वरूपस्य न अपि तद्विशेषाणाम् । किम् प्रयोजनम् । राजाद्यर्थम् । सभा राजामनुष्यपूर्वा इनसभम् । ईश्वरसभम् । तस्य एव न भवति राजसभा । तद्विशेषाणाम् च न भवति पुष्यमित्रसभा । चन्द्रगुप्तसभा ।

1.1.68.4.4 झित् तद्विशेषाणाम् च मत्स्याद्यर्थम् । झिन्निर्देशः कर्तव्यः । ततः वक्तव्यम् तस्य च ग्रहणम् भवति तद्विशेषाणाम् च इति । किम् प्रयोजनम् । मत्स्याद्यर्थम् । पक्षिमत्स्यमृगान् हन्ति इति ठक् पाक्षिकः । मात्स्यिकः । तद्विशेषाणाम् शाकुनिकः । पर्यायाणाम् न भवति अजिह्मान् हन्ति अनिमिषान् हन्ति इति । अथ एकस्य इष्यते मीनान् हन्ति इति मैनिकः ।

**अण् उदित् सवर्णस्य च अप्रत्ययः । (1.1.69/14)**

1.1.69.1 परेण णकारेण प्रत्याहारग्रहणम् । अण् गृह्यमाणः उदित् च सवर्णानाम् ग्राहकः भवति [स्वस्य च रूपस्य] प्रत्ययम् वर्जयित्वा ।

1.1.69.2 [आत् गुणः अस्य च्वौ यस्य ईति च]। स्वरानुनासिक्य[कालभिन्नस्य ग्रहणम् भवति] । उदित् खलु अपि चुटू लशक्वतद्धिते । चवर्गटवर्गयोः कवर्गस्य च ग्रहणम् भवति ।

1.1.69.3 [अप्रत्ययः इति] किम् । सनाशंसभिक्षः उः अ साम्प्रतिके दीर्घः न भवति ।

**तपरः तत्कालस्य । (1.1.70/15)**

1.1.70.1 तः परः यस्मात् सः अयम् तपरः तात् अपि परः तपरः । तपरः वर्णः तत्कालस्य आत्मना [तुल्यकालस्य] गुणान्तरयुक्तस्य सवर्णस्य ग्राहकः भवति स्वस्य च रूपस्य । विध्यर्थम् इदम् । अण् इति न अनुवर्तते । अणाम् अन्येषाम् च [तपराणाम् इदम् एव ग्रहणकशास्त्रम्] । अतः भिसः ऐस् [इति एवमादिषु पूर्वग्रहणकशास्त्रम् न प्रवर्तते एव] । अतपराः [अणः तस्य अवकाशः] ।

1.1.70.2 किम् उदाहरणम् । अतः भिसः ऐस् [वृक्षैः । प्लक्षैः] । विड्वनोः अनुनासिकस्य आत् [अब्जाः गोजाः] ।

1.1.70.3 तत्कालस्य इति किम् । खट्वाभिः । मालाभिः ।

**आदिः अन्त्येन सह इता ।** (1.1.71/2)

1.1.71.1 आदिः अन्त्येन इत्सञ्ज्ञकेन सह गृह्यमाणः तन्मध्यपतितानाम् वर्णानाम् ग्राहकः भवति स्वस्य च रूपस्य ।

1.1.71.2 अण् । अक् । अच् । हल् । सुप् । तिङ् ।

1.1.71.3 अन्त्येन इति किम्। सुट् इति तृतीयैकवचनेन टा इति अनेन ग्रहणम् मा भूत्।

**येन विधिः तदन्तस्य। (1.1.72/26)**

1.1.72.1 [येन] विशेषणेन विधिः [विधीयते] सः [तदन्तस्य] आत्मान्तस्य समुदायस्य ग्राहकः भवति स्वस्य च रूपस्य।

1.1.72.2 [एः अच्] इवर्णान्तात् अच्प्रत्ययः भवति चयः। जयः। अयः। ओः आवश्यके उवर्णान्तात् ण्यत् भवति [अवश्यलाव्यम्। अवश्यपाव्यम्]।

1.1.72.3 समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधः वक्तव्यः। [द्वितीयान्तम् श्रितादिभिः सह समस्यते] कष्टश्रितः। इह मा भूत् कष्टम् परमश्रितः इति। प्रत्ययविधौ नडादिभ्यः फक् नडस्य अपत्यम् नाडायनः। इह मा भूत् सूत्रनडस्य अपत्यम् सौत्रनाडिः। किम् अविशेषेण। न इति आह।

1.1.72.4 [उगिद्वर्ण]ग्रहणवर्जम् इति वाच्यम्। उगितः च इति ङीप्प्रत्ययः तदन्तात् अपि भवति भवती अतिभवती। वर्णग्रहणम् अतः इञ् दाक्षिः। प्लाक्षिः।

1.1.72.5 [यस्मिन्] विधिः [तदादौ अल्ग्रहणे]। अल्ग्रहणेषु यस्मिन् विधिः तदादौ इति वक्तव्यम्। अचिश्नुधातुभ्रुवाम् य्वोः इयङुवङौ इति श्रियः। भ्रुवः।

**वृद्धिः यस्य अचाम् आदिः तत् वृद्धम्। (1.1.73/1335)**

1.1.73.1 यस्य इति समुदायः उच्यते।

[अचाम् मध्ये यस्य वृद्धिसञ्ज्ञकः आदिभूतः तत् शब्दरूपम् वृद्धसञ्ज्ञम् भवति। अचाम् इति जातौ बहुवचनम्]।

1.1.73.2 [शालीयः। मालीयः]। औपगवीयः। [कापटवीयः]।

1.1.73.3 आदिः इति किम्। [सभासन्नयने भवः] साभासन्नयनः।

1.1.73.4 वा नामधेयस्य [वृद्धसञ्ज्ञा वक्तव्या देवदत्तीयाः । दैवदत्ताः] । गोत्रान्तात् [असमस्तवत् प्रत्ययः भवति इति वक्तव्यम्] । घृतप्रधानः रौढिः [घृतरौढिः] । तस्य छात्राः घृतरौढीयाः । ओदनप्रधानः पाणिनिः ओदनपाणिनिः । तस्य छात्राः ओदनपाणिनीयाः । [वृद्धाम्भीयाः] । वृद्धकाश्यपीयाः । जिह्वाकात्यहरितकात्यवर्जम् [जैह्वाकाताः । हारितकाताः] ।

**त्यदादीनि च । (1.1.74/1336)**

1.1.74.1 यस्याचामादिग्रहणम् उत्तरार्थम् अनुवर्तते । इह तु न सम्बध्यते । [त्यदादीनि शब्दरूपाणि वृद्धसञ्ज्ञानि भवन्ति] ।

1.1.74.2 त्यदीयम् । तदीयम् । एतदीयम् । इदमीयम् । अदसीयम् । त्वदीयम् । [त्वादायनिः] । मदीयम् । [मादायनिः] । भवदीयम् । किमीयम् ।

**एङ् प्राचाम् देशे । (1.1.75/1338)**

1.1.75.1 यस्याचामादिग्रहणम् अनुवर्तते । एङ् यस्य अचाम् आदिः तत् [प्राचाम् देशाभिधाने] वृद्धसञ्ज्ञम् भवति ।

1.1.75.2 [एणीपचनीयः । भोजकटीयः । गोनर्दीयः] ।

1.1.75.3 एङ् इति किम् । [आहिच्छत्रः । कान्यकुब्जः] । प्राचाम् इति किम् । देवदत्तः नाम वाहीकेषु ग्रामः तत्र भवः [दैवदत्तः] । देशे इति किम् । गोमत्याम् भवाः मत्स्याः [गौमताः] ।

1.1.75.4 [प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा । विदुषाम् शब्दसिद्ध्यर्थम् सा नः पातु शरावती ॥]

इति श्रीजयादित्यविरचितयां काशिकायां वृत्तौ प्रथमाध्यायस्य प्रथमः पादः॥

------------------------------

# Chapter 3

## The text of the KV as available to us from the Padamañjarī

In this chapter, we present evidence collected from the celebrated commentary on the KV namely the Padamañjarī. As was shown in Kulkarni. Kahrs 2016 we classify this evidence into two categories: Direct and Indirect. Below we show direct evidence with underline and indirect evidence with square brackets. There are some words which are available from both directions as well as indirect evidence. Such words have both marks underline as well as square brackets.

**वृद्धिः आत् ऐच् । (1.1.1/16)**

1.1.1.1 वृद्धिशब्दः सञ्ज्ञात्वेन विधीयते प्रत्येकम् आदैचाम् वर्णानाम् सामान्येन तद्भावितानाम् अतद्भावितानाम् च । तपरकरणम् ऐजर्थम् । तात् अपि परः तपरः इति खट्वैडकादिषु त्रिमात्रचतुर्मात्रप्रसङ्गनिवृत्तये ।

1.1.1.2 आश्वलायनः । ऐतिकायनः । औपगवः । औपमन्यवः । [शालीयः । मालीयः] ।

1.1.1.3 वृद्धिप्रदेशाः सिचि वृद्धिः परस्मैपदेषु इति एवमादयः ।

**अत् एङ् गुणः । (1.1.2/17)**

1.1.2.1 गुणशब्दः सञ्ज्ञात्वेन विधीयते प्रत्येकम् अदेङाम् वर्णानाम् सामान्येन तद्भावितानाम् अतद्भावितानाम् च । तपरकरणम् तु इह सर्वार्थम् ।

1.1.2.2 तरिता । [चेता । स्तोता] । जयन्ति । अहम् पचे ।

1.1.2.3 गुणप्रदेशाः मिदेः गुणः इति एवमादयः ।

**इकः गुणवृद्धी । (1.1.3/17)**

1.1.3.1 [परिभाषा इयम् स्थानिनियमार्था] । [अनियमप्रसङ्गे नियमः] विधीयते।

1.1.3.2 वृद्धिगुणौ स्वसञ्ज्ञया शिष्यमाणौ इकः एव स्थाने वेदितव्यौ। वक्ष्यति सार्वधातुकार्धधातुकयोः अङ्गस्य गुणः इति। सः इकः एव स्थाने वेदितव्यः।

1.1.3.3 तरति । नयति । भवति । वृद्धिः खलु अपि [अकार्षीत् । अहार्षीत्] । अचैषीत्। अनैषीत्। अलावीत्। अस्तावीत्।

1.1.3.4 गुणवृद्धी स्वसञ्ज्ञया विधीयेते तत्र इकः इति एतत् उपस्थितम् द्रष्टव्यम् । किम् कृतम् भवति । द्वितीया षष्ठी प्रादुः भाव्यते । मिदिमृजिपुगन्तलघूपधच्र्छिदृशिक्षिप्रक्षुद्रेषु अङ्गेन इक् विशेष्यते । जुसि सार्वधातुकादिगुणेषु इका अङ्गम् विशेष्यते। मेद्यते। अबिभयुः।

1.1.3.5 इकः इति किम् । आत्सन्ध्यक्षरव्यञ्जनानाम् मा भूत् । यानम् । ग्लायति। उम्भिता। पुनर्गुणवृद्धिग्रहणम् स्वसञ्ज्ञया विधाने नियमार्थम्। इह मा भूत् द्यौः पन्थाः सः इमम् इति।

**न धातुलोपे आर्धधातुके । (1.1.4/2656)**

1.1.4.1 धात्वेकदेशः धातुः। तस्य लोपः यस्मिन् आर्धधातुके तत् आर्धधातुकम् धातुलोपम्। तत्र ये गुणवृद्धी प्राप्नुतः ते न भवतः।

1.1.4.2 लोलुवः पोपुवः मरीमृजः। लोलूयादिभ्यः यङन्तेभ्यः पचाद्यचि विहिते यङः अचि च इति यङः लुकि कृते तम् एव अचम् आश्रित्य ये गुणवृद्धी प्राप्ते तयोः प्रतिषेधः।

1.1.4.3 धातुग्रहणम् किम् । लूञ् लविता रेट् असि पर्णम् न वेः । अनुबन्धप्रत्ययलोपे मा भूत्। रिषेः हिंसार्थस्य विच्प्रत्ययलोपे उदाहरणम् रेट् इति। आर्धधातुके इति किम्। त्रिधा बद्धः वृषभः रोरवीति इति। सार्वधातुके मा

भूत् । इकः इति एव अभाजि रागः । बहुव्रीहिसमाश्रयणम् किम् । क्नोपयति प्रेद्धम् ।

**क्ङिति च । (1.1.5/2217)**

1.1.5.1 निमित्तसप्तमी एषा । क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतः ते न भवतः ।

1.1.5.2 चितः चितवान् । स्तुतः स्तुतवान् । भिन्नः भिन्नवान् । मृष्टः मृष्टवान् । ङिति खलु अपि चिनुतः चिन्वन्ति । मृष्टः मृजन्ति । [गकारः अपि अत्र] चर्त्वभूतः निर्दिश्यते । [ग्लाजिस्थः च ग्स्नुः] जिष्णुः । भूष्णुः । इकः इति एव कामयते लैगवायनः ।

1.1.5.3 मृजेः अजादौ सङ्क्रमे विभाषा वृद्धिः इष्यते । सङ्क्रमः नाम गुणवृद्धिप्रतिषेधविषयः । परिमृजन्ति परिमार्जन्ति । परिमृजन्तु परिमार्जन्तु । लघूपधगुणस्य अपि अत्र प्रतिषेधः । अचिनवम् असुनवम् इत्यादौ लकारस्य सति अपि ङित्त्वे यासुटः ङिद्वचनम् ज्ञापकम् ङिति यत् कार्यम् तत् लकारे ङिति न भवति इति ।

**दीधीवेवीटाम् । (1.1.6/2190)**

1.1.6.1 दीधीवेव्योः इटः च ये गुणवृद्धी प्राप्नुतः ते न भवतः ।

1.1.6.2 आदीध्यनम् आदीध्यकः । आवेव्यनम् आवेव्यकः । इटः खलु अपि _। रणिता श्वः । वृद्धिः इटः न सम्भवति इति लघूपधगुणस्य अत्र प्रतिषेधः ।

**हलः अनन्तराः संयोगः । (1.1.7/30)**

1.1.7.1 भिन्नजातीयैः अज्भिः अव्यवहिताः श्लिष्टोच्चारिताः हलः संयोगसञ्ज्ञाः भवन्ति । समुदायः सञ्ज्ञी जातौ च इदम् बहुवचनम् । तेन द्वयोः बहूनाम् च संयोगसञ्ज्ञा सिद्धा भवति ।

1.1.7.2 अग्निः इति गनौ । [अश्वः इति शवौ । कर्णः इति रणौ । इन्द्रः । चन्द्रः इति नदराः ।] उष्ट्रः राष्ट्रम् भ्राष्ट्रम् इति षटराः । तिलान् स्त्री आवपति इति नसतरयाः नतसतरयाः वा ।

1.1.7.3 हलः इति किम् । तितउच्छत्रम् संयोगान्तस्य लोपः इति लोपः स्यात् । अनन्तराः इति किम् । पचति पनसम् स्कोः संयोगाद्योः अन्ते च इति लोपः स्यात् ।

1.1.7.4 संयोगप्रदेशाः संयोगान्तस्य लोपः इति एवमादयः ।

**मुखनासिकावचनः अनुनासिकः । (1.1.8/9)**

1.1.8.1 मुखसहिता नासिका मुखनासिका तया यः उच्चार्यते वर्णः सः अनुनासिकसञ्ज्ञः भवति ।

1.1.8.2 आङः अनुनासिकः छन्दसि । अभ्रे आँ अपः । गभीरे आँ उग्रपुत्रे । च न आँ इन्द्रः ।

1.1.8.3 मुखग्रहणम् किम् । अनुस्वारस्य एव हि स्यात् । नासिकाग्रहणम् किम् । कचटतपानाम् मा भूत् ।

1.1.8.4 अनुनासिकप्रदेशाः आङः अनुनासिकः छन्दसि इति एवमादयः ।

**तुल्यास्यप्रयत्नम् सवर्णम् । (1.1.9/10)**

1.1.9.1 तुल्यशब्दः सदृशपर्यायः । आस्ये भवम् आस्यम् ताल्वादिस्थानम् । प्रयतनम् प्रयत्नः स्पृष्टतादिः वर्णगुणः । तुल्यः आस्ये प्रयत्नः यस्य वर्णस्य येन वर्णेन सह सः समानजातीयम् प्रति सवर्णसञ्ज्ञः भवति ।

1.1.9.2 चत्वारः आभ्यन्तराः प्रयत्नाः सवर्णसंज्ञायाम् आश्रीयन्ते [स्पृष्टता ईषत्स्पृष्टता संवृतता विवृतता[ च इति । अ अ अ इति त्रयः अकाराः उदात्तानुदात्तस्वरिताः प्रत्येकम् सानुनासिकाः निरनुनासिकाः च ह्रस्वदीर्घप्लुतभेदात् अष्टादशधा भिद्यन्ते । तथा इवर्णः तथा उवर्णः तथा

ऋवर्णः । ऌवर्णस्य दीर्घाः न सन्ति । तम् द्वादशभेदम् आचक्षते । सन्ध्यक्षराणाम् ह्रस्वाः न सन्ति तानि अपि द्वादशप्रभेदानि । [अन्तःस्थाः द्विप्रभेदाः] रेफवर्जिताः [यवलाः] सानुनासिकाः निरनुनासिकाः च । रेफोष्मणाम् सवर्णाः न सन्ति । वर्ग्यः वर्ग्येण सवर्णः । दण्डाग्रम् । खट्वाग्रम् ।

1.1.9.3 आस्यग्रहणम् किम् । कचटपानाम् भिन्नस्थानानाम् तुल्यप्रयत्नानाम् मा भूत् । किम् च स्यात् । तर्प्ता तर्प्तुम् इति अत्र झरः झरि सवर्णे इति पकारस्य तकारे लोपः स्यात् । प्रयत्नग्रहणम् किम् । इचुयशानाम् तुल्यस्थानानाम् भिन्नजातीयानाम् मा भूत् । किम् च स्यात् । अरुः श्च्योतति इति अत्र झरः झरि सवर्णे इति शकारस्य चकारे लोपः स्यात् । ऋकारऌकारयोः सवर्णसञ्ज्ञा वक्तव्या । होतॄकारः । होतृकारः । [उभयोः ऋवर्णस्य ऌवर्णस्य च आन्तरतमः सवर्णः दीर्घः न अस्ति इति ऋकारः एव दीर्घः भवति ।]

1.1.9.4 सवर्णप्रदेशाः अकः सवर्णे दीर्घः इति एवमादयः ।

**न अज्झलौ । (1.1.10/13)**

1.1.10.1 अच् च हल् च अज्झलौ । तुल्यास्यप्रयत्नौ अपि अज्झलौ परस्परम् सवर्णसञ्ज्ञौ न भवतः ।

1.1.10.2 अवर्णहकारौ – दण्डहस्तः इवर्णशकारौ दधि शीतम् सवर्णदीर्घत्वम् न भवति । वैपाशः मत्स्यः आनडुहम् चर्म इति यस्य इति च इति लोपः न भवति ।

**ईदूदेद्द्विवचनम् प्रगृह्यम् । (1.1.11/100)**

1.1.11.1 ईत् ऊत् एत् इति एवमन्तम् द्विवचनम् शब्दरूपम् प्रगृह्यसञ्ज्ञम् भवति ।

1.1.11.2 [अग्नी इति ।] वायू इति । माले इति । [पचेते इति ।]

1.1.11.3 ईत् ऊत् एत् इति किम् । वृक्षावत्र । प्लक्षावत्र । द्विवचनम् इति किम् । कुमार्यत्र । किशोर्यत्र । तपरकरणम् असन्देहार्थम् ।
1.1.11.4 प्रगृह्यप्रदेशाः प्लुतप्रगृह्याः अचि नित्यम् इति एवमादयः ।
1.1.11.5 ईदादीनाम् प्रगृह्यत्वे मणीवादीनाम् प्रतिषेधः वक्तव्यः । मणीव उष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम । दम्पतीव । जम्पतीव । रोदसीव ।

**अदसः मात् । (1.1.12/101)**

1.1.12.1अदसः सम्बन्धी यः मकारः तस्मात् परे ईदूदेतः प्रगृह्यसञ्ज्ञाः भवन्ति ।
1.1.12.2 अमी अत्र । अमी आसते । अमू अत्र । अमू आसाते । एकारस्य उदाहरणम् न अस्ति ।
1.1.12.3 अदसः इति किम् । शम्यत्र । दाडिम्यत्र । मात् इति किम् अमुके ऽत्र ।

**शे । (1.1.13/102)**

1.1.13.1 शे इति एतत् प्रगृह्यसञ्ज्ञम् भवति । किम् इदम् शे इति । सुपाम् आदेशः छन्दसि ।
1.1.13.2 न [युष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती ।] युष्मे इति । अस्मे इति । [त्वे रायः । मे रायः ।] त्वे इति । मे इति । छान्दसम् एतत् एव एकम् उदाहरणम् अस्मे इन्द्राबृहस्पती इति । तत्र तथा पाठात् । इतरत् तु [लौकिकम् अनुकरणम्] युष्मे इति अस्मे इति त्वे इति मे इति ।

**निपातः एकाच् अनाङ् । (1.1.14/103)**

1.1.14.1 एकः च असौ अच् च एकाच् निपातः यः एकाच् आङ्वर्जितः सः प्रगृह्यसञ्ज्ञः भवति ।

1.1.14.2 अ अपेहि । इ इन्द्रम् पश्य । उ उत्तिष्ठ । आ एवम् नु मन्यसे । आ एवम् किल तत् ।

1.1.14.3 निपातः इति किम् । चकारात्र । जहारात्र । एकाच् इति किम् । प्राग्नये वाचम् ईरय । अनाङ् इति किम् । आ उदकान्तात् ओदकान्तात् । ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः एतम् आतम् ङितम् विद्यात् वाक्यस्मरणयोः अङित् ।

**ओत् । (1.1.15/104)**

1.1.15.1 निपातः इति वर्तते । तस्य ओकारेण तदन्तविधिः । ओदन्तः यः निपातः सः प्रगृह्यसञ्ज्ञः भवति ।

1.1.15.2 आहो इति । उताहो इति ।

**सम्बुद्धौ शाकल्यस्य इतौ अनार्षे । (1.1.16/105)**

1.1.16.1 ओत् इति वर्तते । सम्बुद्धिनिमित्तः यः ओकारः सः शाकल्यस्य आचार्यस्य मतेन प्रगृह्यसञ्ज्ञः भवति इतिशब्दे अनार्षे अवैदिके परतः ।

1.1.16.2 वायो इति वायविति । भानो इति भानविति ।

1.1.16.3 सम्बुद्धौ इति किम् । गवित्ययमाह । अत्र अनुकार्यानुकरणयोः भेदस्य अविवक्षितत्वात् असति अर्थवत्त्वे विभक्तिः न भवति । शाकल्यग्रहणम् विभाषार्थम् । इतौ इति किम् । वायो ऽत्र । अनार्षे इति किम् । एताः गाः ब्रह्मबन्ध इति अब्रवीत् ।

**उञः । (1.1.17/106)**

1.1.17.1 शाकल्यस्य इतौ अनार्षे इति वर्तते । उञः प्रगृह्यसञ्ज्ञा भवति इतौ शाकल्यस्य आचार्यस्य मतेन । शाकल्यस्य इति विभाषार्थम् ।

1.1.17.2 [उ इति विति] ।

**ऊँ । (1.1.18/107)**

1.1.18.1 उञः ञितौ अनार्षे ऊँ इति अयम् आदेशः भवति दीर्घः अनुनासिकः च शाकल्यस्य मतेन प्रगृह्यसञ्ज्ञकः च ।

1.1.18.2 शाकल्यस्य ग्रहणम् विभाषार्थम् इह अपि अनुवर्तते । तेन त्रीणि रूपाणि भवन्ति उ इति विति ऊँ इति ।

**ईदूतौ च सप्तम्यर्थे । (1.1.19/109)**

1.1.19.1 शाकल्यस्य इतौ अनार्षे इति निवृत्तम् । ईदन्तम् ऊदन्तम् च शब्दरूपम् सप्तम्यर्थे वर्तमानम् प्रगृह्यसञ्ज्ञम् भवति ।

1.1.19.2 अधि अस्याम् मामकी तनू । मामक्याम् तन्वाम् इति प्राप्ते । मामक्याम् मामकी इति तन्वाम् तनू इति । सोमः गौरी अधि श्रितः ।

1.1.19.3 ईदूतौ इति किम् । प्रियः सूर्ये प्रियः अग्ना भवाति । अग्निशब्दात् परस्याः सप्तम्याः डादेशः । सप्तमीग्रहणम् किम् । धीती मती सुष्टुती धीत्या मत्या सुष्टुत्या इति प्राप्ते । अर्थग्रहणम् किम् । वाप्यश्वः । नद्यातिः । तपरकरणम् असन्देहार्थम् ।

1.1.19.4 ईदूतौ सप्तमी इति एव लुप्ते अर्थग्रहणात् भवेत् । पूर्वस्य चेत् सवर्णः असौ आडाम्भावः प्रसज्यते॥ वचनात् यत्र दीर्घत्वम् तत्र अपि सरसी यदि । ज्ञापकम् स्यात् तदन्तत्वे मा वा पूर्वपदस्य भूत् ।

**दाधाः घु अदाप् । (1.1.20/2373)**

1.1.20.1 दारूपाः चत्वारः धातवः धारूपौ च द्वौ दाब्दैपौ वर्जयित्वा घुसञ्ज्ञकाः भवन्ति ।

1.1.20.2 डुदाञ् प्रणिददाति । दाण् प्रणिदाता । दो प्रणिद्यति । देङ् प्रणिदयते । डुधाञ् प्रणिदधाति । धेट् प्रणिधयति वत्सः मातरम् ।

1.1.20.3 अदाप् इति किम् । दाप् लवने दातम् बर्हिः । दैप् शोधने [अवदातम्] मुखम् ।
1.1.20.4 घुप्रदेशाः घुमास्थागापाजहातिसाम् हलि इति एवमादयः ।

**आद्यन्तवत् एकस्मिन् । (1.1.21/348)**

1.1.21.1 असहायस्य आद्यन्तोपदिष्टानि कार्याणि न सिध्यन्ति इति अयम् अतिदेशः आरभ्यते । सप्तम्यर्थे वतिः । आदौ इव अन्ते इव एकस्मिन् अपि कार्यम् भवति ।
1.1.21.2 यथा कर्तव्यम् इति अत्र प्रत्ययाद्युदात्तत्वम् भवति एवम् औपगवम् इति अत्र अपि यथा स्यात् । यथा वृक्षाभ्याम् इति अत्र अतः अङ्गस्य दीर्घत्वम् एवम् आभ्याम् इति अत्र अपि यथा स्यात् ।
1.1.21.3 एकस्मिन् इति किम् । सभासन्नयने भवः साभासन्नयनः आकारम् आश्रित्य वृद्धसञ्ज्ञा न भवति ।

**तरप्तमपौ घः । (1.1.22/2003)**

1.1.22.1 तरप् तमप् इति एतौ प्रत्ययौ घसञ्ज्ञौ भवतः ।
1.1.22.2 कुमारितरा । कुमारितमा । ब्राह्मणितरा । ब्राह्मणितमा ।
1.1.22.3 घप्रदेशाः घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्यः अनेकाचः ह्रस्वः इति एवमादयः ।

**बहुगणवतुडति सङ्ख्या । (1.1.23/958)**

1.1.23.1 बहु गण वतु डति इति एते सङ्ख्यासञ्ज्ञाः भवन्ति ।
1.1.23.2 बहुकृत्वः । बहुधा । बहुकः । बहुशः । गणकृत्वः । गणधा । गणकः । गणशः । तावत्कृत्वः । तावद्धा । तावत्कः । तावच्छः । कतिकृत्वः । कतिधा । कतिकः । कतिशः । बहुगणशब्दयोः वैपुल्ये सङ्घे च वर्तमानयोः इह ग्रहणम् न

अस्ति सङ्ख्यावाचिनोः एव भूर्यादीनाम् निवृत्त्यर्थम् सङ्ख्यासञ्ज्ञा विधीयते ।

1.1.23.3 अर्धपूर्वपदः च पूरणप्रत्ययान्तः सङ्ख्यासञ्ज्ञः भवति इति वक्तव्यम् समासकन्विध्यर्थम् । अर्धपञ्चमशूर्पः । अर्धम् पञ्चमम् येषाम् इति बहुव्रीहौ कृते अर्धपञ्चमैः शूर्पैः क्रीतः । तद्धितार्थ इति समासः । तत्र दिक्सङ्ख्ये सञ्ज्ञायाम् इति अनुवृत्तेः ततः सङ्ख्यापूर्वस्य द्विगुसञ्ज्ञायाम् शूर्पात् अञ् अन्यतरस्याम् इति अञ् ठञ् च । अध्यर्धपूर्वद्विगोः लुक् असञ्ज्ञायाम् इति लुक् । अर्धपञ्चमकः ।

1.1.23.4 सङ्ख्याप्रदेशाः सङ्ख्या वंश्येन इति एवमादयः ।

**ष्णान्ता षट् । (1.1.24/369)**

1.1.24.1 स्त्रीलिङ्गनिर्देशात् सङ्ख्या इति सम्बध्यते । षकारान्ता नकारान्ता च या सङ्ख्या सा षट्सञ्ज्ञा भवति ।

1.1.24.2 षकारान्ता तावत् षट् तिष्ठन्ति । षट् पश्य । नकारान्ताः – पञ्च । सप्त । नव । दश ।

1.1.24.3 अन्तग्रहणम् औपदेशिकार्थम् । तेन इह न भवति शतानि सहस्राणि । अष्टानाम् इति अत्र नुट् भवति ।

1.1.24.4 षट्प्रदेशाः षड्भ्यः लुक् इति एवमादयः ।

**डति च । (1.1.25/259)**

1.1.25.1 डत्यन्ता या सङ्ख्या सा षट्सञ्ज्ञा भवति ।

1.1.25.2 कति तिष्ठन्ति । कति पश्य ।

**क्तक्तवतू निष्ठा । (1.1.26/3012)**

1.1.26.1 क्तः च क्तवतुः च क्तक्तवतू प्रत्ययौ [निष्ठासञ्ज्ञौ] भवतः ।

1.1.26.2 कृतः । कृतवान् । भुक्तः । भुक्तवान् । ककारः कित्कार्यार्थः उकारः उगित्कार्यार्थः ।

1.1.26.3 निष्ठाप्रदेशाः श्वीदितः निष्ठायाम् इति एवमादयः ।

**सर्वादीनि सर्वनामानि । (1.1.27/213)**

1.1.27.1 सर्वशब्दः आदिः येषाम् [तानि इमानि] सर्वादीनि सर्वनामसञ्ज्ञानि भवन्ति ।

1.1.27.2 [सर्वः सर्वौ] सर्वे । सर्वस्मै । सर्वस्मात् । सर्वेषाम् । सर्वस्मिन् । सर्वकः । विश्वः विश्वौ विश्वे । विश्वस्मै । विश्वस्मात् । विश्वेषाम् । विश्वस्मिन् । विश्वकः । उभ । उभय । उभशब्दस्य सर्वनामत्वे प्रयोजनम् सर्वनाम्नः तृतीया च इति । उभाभ्याम् हेतुभ्याम् वसति उभयोः हेत्वोः वसति । उभये । उभयस्मै । उभयस्मात् । उभयेषाम् । उभयस्मिन् । डतर डतम । कतर कतम । कतरस्मै कतमस्मै । इतर । अन्य । अन्यतर । इतरस्मै । अन्यस्मै । अन्यतरस्मै । त्वशब्दः अन्यवाची स्वरभेदात् द्विः पठितः । एकः उदात्तः । द्वितीयः अनुदात्तः । केचित् तकारान्तम् एकम् पठन्ति । त्व त्वत् इति द्वौ अपि च अनुदात्तौ इति स्मरन्ति । नेम नेमस्मै । वक्ष्यमाणेन जसि विभाषा भवति । नेमे नेमाः इति । सम समस्मै । कथम् यथासङ्ख्यम् अनुदेशः समानाम् समे देशे यजेत इति । समस्य [सर्वशब्दपर्यायस्य] सर्वनामसञ्ज्ञा इष्यते न सर्वत्र । सिम सिमस्मै ।

1.1.27.2.1 पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् असञ्ज्ञायाम् । स्वम् अज्ञातिधनाख्याम् । अन्तरम् बहिर्योगोपसंव्यानयोः ।

1.1.27.2.2 त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् । सर्वादिः ।

1.1.27.3 सर्वनामप्रदेशाः सर्वनाम्नः स्मै इति एवमादयः ।

**विभाषा दिक्समासे बहुव्रीहौ । (1.1.28/292(**

1.1.28.1 न बहुव्रीहौ इति प्रतिषेधम् वक्ष्यति । तस्मिन् नित्ये प्रतिषेधे प्राप्ते विभाषा इयम् आरभ्यते । दिशाम् समासः दिक्समासः । <u>दिगुपदिष्टे</u> [समासे बहुव्रीहौ विभाषा सर्वादीनि सर्वनामसञ्ज्ञानि भवन्ति ।]

1.1.28.2 उत्तरपूर्वस्यै उत्तरपूर्वायै । दक्षिणपूर्वस्यै दक्षिणपूर्वायै ।

1.1.28.3 दिग्ग्रहणम् किम् । न बहुव्रीहौ इति प्रतिषेधम् वक्ष्यति तत्र न ज्ञायते क्व विभाषा क्व प्रतिषेधः इति । दिग्ग्रहणे पुनः क्रियमाणे ज्ञायते दिगुपदिष्टसमासे विभाषा अन्यत्र प्रतिषेधः इति । <u>समासग्रहणम् किम्</u> । समासः एव यः बहुव्रीहिः तत्र विभाषा यथा स्यात् । बहुव्रीहिवद्भावेन यः बहुव्रीहिः तत्र मा भूत् <u>दक्षिणदक्षिणस्यै देहि</u> । बहुव्रीहौ इति किम् । द्वन्द्वे विभाषा मा भूत् । <u>दक्षिणोत्तरपूर्वाणाम्</u> इति । द्वन्द्वे च इति नित्यम् प्रतिषेधः भवति ।

**न बहुव्रीहौ । (1.1.29/222)**

1.1.29.1 <u>सर्वनामसञ्ज्ञायाम्</u> तदन्तविधेः अभ्युपगमात् बहुव्रीहेः अपि सर्वाद्यन्तस्य सञ्ज्ञा स्यात् इति प्रतिषेधः आरभ्यते । बहुव्रीहौ समासे सर्वादीनि सर्वनामसञ्ज्ञानि न भवन्ति ।

1.1.29.2 [<u>प्रियविश्वाय</u>] । प्रियोभयाय । <u>द्व्यन्याय</u> । त्र्यन्याय ।

1.1.29.3 <u>इह च</u> [त्वत्कपितृकः मत्कपितृकः] इति अकच् न भवति । [<u>बहुव्रीहौ</u> इति वर्तमाने पुनः बहुव्रीहिग्रहणम्] भूतपूर्वमात्रे अपि प्रतिषेधः यथा स्यात् <u>वस्त्रान्तरवसनान्तराः</u> इति ।

**तृतीयासमासे । (1.1.30/223)**

1.1.30.1 तृतीयासमासे सर्वादीनि सर्वनामसञ्ज्ञानि न भवन्ति ।

1.1.30.2 मासपूर्वाय । संवत्सरपूर्वाय । द्व्यहपूर्वाय । त्र्यहपूर्वाय । <u>समासे इति वर्तमाने</u> पुनः समासग्रहणम् [तृतीयासमासार्थवाक्ये] अपि प्रतिषेधः यथा

स्यात् । मासेन पूर्वाय । पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः इति तृतीयासमासम् प्रतिपदम् वक्ष्यति तस्य इदम् ग्रहणम् । न यस्य कस्य चित् तृतीयासमासस्य । कर्तृकरणे कृता बहुलम् इति त्वयका कृतम् मयका कृतम् ।

**द्वन्द्वे च । (1.1.31/224)**

1.1.31.1 द्वन्द्वे च समासे सर्वादीनि सर्वनामसञ्ज्ञानि न भवन्ति ।

1.1.31.2 पूर्वापराणाम् । कतरकतमानाम् ।

**विभाषा जसि । (1.1.32/225)**

1.1.32.1 पूर्वेण नित्ये प्रतिषेधे प्राप्ते जसि विभाषा आरभ्यते । द्वन्द्वे समासे जसि विभाषा सर्वादीनि सर्वनामसञ्ज्ञानि न भवन्ति ।

1.1.32.2 कतरकतमे कतरकतमाः । जसः कार्यम् प्रति विभाषा अकच् [हि] न भवति कतरकतमकाः ।

**प्रथमचरमतयाल्पार्धकतिपयनेमाः च । (1.1.33/226)**

1.1.33.1 विभाषा जसि इति वर्तते । द्वन्द्वे इति निवृत्तम् । प्रथम चरम तय अल्प अर्ध कतिपय नेम इति एते जसि विभाषा सर्वनामसञ्ज्ञाः भवन्ति ।

1.1.32.2 प्रथमे प्रथमाः । चरमे चरमाः । द्वितये द्वितयाः । अल्पे अल्पाः । अर्धे अर्धाः । कतिपये कतिपयाः । नेमे नेमाः । तय इति तयप्प्रत्ययः । शिष्टानि प्रातिपदिकानि । तत्र नेम इति सर्वादिषु पठ्यते । तस्य प्राप्ते विभाषा अन्येषाम् अप्राप्ते । उभयशब्दस्य [तयप्प्रत्ययान्तस्य गणे पाठात्] नित्या सर्वनामसञ्ज्ञा । इह अपि जस्कार्यम् प्रति विभाषा । काकचोः यथायोगम् वृत्तिः ।

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् असञ्ज्ञायाम्। (1.1.34/218)**

1.1.34.1 पूर्व पर अवर दक्षिण उत्तर अपर अधर इति एषाम् गणे पाठात् पूर्वेण नित्यायाम् सर्वनामसञ्ज्ञायाम् प्राप्तायाम् जसि विभाषा आरभ्यते। पूर्वादीनि विभाषा जसि सर्वनामसञ्ज्ञानि भवन्ति व्यवस्थायाम् असञ्ज्ञायाम् । [स्वाभिधेयापेक्षावधिनियमः व्यवस्था।]

1.1.34.2 पूर्वे पूर्वाः| परे पराः | अवरे अवराः| दक्षिणे दक्षिणाः| उत्तरे उत्तराः| अपरे अपराः| अधरे अधराः।

1.1.34.3 व्यवस्थायाम् इति किम्। दक्षिणाः इमे गाथकाः। प्रवीणाः इति अर्थः। असञ्ज्ञायाम् इति किम्। [उत्तराः कुरवः]। सत्याम् एव व्यवस्थायाम् इयम् तेषाम् सञ्ज्ञा।

**स्वम् अज्ञातिधनाख्यायाम्। (1.1.35/219)**

1.1.35.1 अत्र अपि नित्या सर्वनामसञ्ज्ञा प्राप्ता जसि विभाष्यते। स्वम् इति एतत् शब्दरूपम् जसि विभाषा सर्वनामसञ्ज्ञम् भवति न चेत् ज्ञातिधनयोः सञ्ज्ञारूपेण वर्तते।

1.1.35.2 स्वे [पुत्राः] स्वाः पुत्राः| स्वे [गावः] स्वाः गावः। आत्मीयाः इति अर्थः।

1.1.35.3 ज्ञातिप्रतिषेधः इति किम्। धूमायन्ते इव [अश्लिष्टाः प्रज्वलन्ति] इव [संहताः | उल्मुकानि] इव मे अमी स्वाः ज्ञातयः भरतर्षभ।। अधनाख्यायाम् इति किम्। प्रभूताः स्वाः न भुज्यन्ते। प्रभूतानि धनानि इति अर्थः।

**अन्तरम् बहिर्योगोपसंव्यानयोः। (1.1.36/220)**

1.1.36.1 अत्र अपि पूर्वेण नित्या सर्वनामसञ्ज्ञा प्राप्ता सा जसि विभाष्यते। अन्तरम् इति एतत् शब्दरूपम् विभाषा जसि सर्वनामसञ्ज्ञम् भवति बहिर्योगे उपसंव्याने च गम्यमाने।

1.1.36.2 अन्तरे गृहाः अन्तराः गृहाः। नगरबाह्याः चाण्डालादिगृहाः उच्यन्ते। अन्तरे शाटकाः अन्तराः शाटकाः । उपसंव्यानम् परिधानीयम् उच्यते न प्रावरणीयम्।

1.1.36.3 बहिर्योगोपसंव्यानयोः इति किम्। अनयोः ग्रामयोः अन्तरे तापसः प्रतिवसति | तस्मिन् अन्तरे शीतानि उदकानि। मध्यप्रदेशवचनः अन्तरशब्दः। [गणसूत्रस्य] च [इदम् प्रत्युदाहरणम्]।

1.1.36.4.1 अपुरि इति वक्तव्यम्। अन्तरायाम् पुरि वसति।

1.1.36.4.2 विभाषाप्रकरणे तीयस्य वा ङित्सु सर्वनामसञ्ज्ञा इति उपसंख्यानम्। द्वितीयस्मै द्वितीयाय तृतीयस्मै तृतीयाय।

**स्वरादिनिपातम् अव्ययम्। (1.1.37/447)**

1.1.37.1 स्वरादीनि शब्दरूपाणि निपाताः च अव्ययसञ्ज्ञानि भवन्ति।

1.1.37.2.1 स्वर् अन्तर् प्रातर् एते अन्तोदात्ताः पठ्यन्ते। पुनर् आद्युदात्तः। सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् आरात् ऋते युगपत् पृथक् एते अपि सनुतर्प्रभृतयः अन्तोदात्ताः पठ्यन्ते।

1.1.37.2.2 ह्यस् श्वस् दिवा रात्रौ सायम् चिरम् मनाक् ईषत् जोषम् तूष्णीम् बहिस् आविस् अवस् अधस् समया निकषा स्वयम् मृषा नक्तम् नञ् हेतौ अद्धा इद्धा सामि एते अपि ह्यस्प्रभृतयः अन्तोदात्ताः पठ्यन्ते।

1.1.37.2.3 वत्। वदन्तम् अव्ययसञ्ज्ञम् भवति | ब्राह्मणवत् | क्षत्रियवत्।

1.1.37.2.4 सन् सनात् सनत् तिरस् एते आद्युदात्ताः पठ्यन्ते।

1.1.37.2.5 अन्तरा अयम् अन्तोदात्तः। अन्तरेण ज्योक् कम् शम् सना सहसा विना नाना स्वस्ति स्वधा अलम् वषट् अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मुधा मिथ्या।

1.1.37.2.6 क्त्वातोसुन्कसुनः। कृत् मकारान्तः सन्ध्यक्षरान्तः। अव्ययीभावः च।

1.1.37.2.7 पुरा मिथो मिथस् प्रबाहुकम् आर्यहलम् अभीक्ष्णम् साकम् सार्धम् समम् नमस् हिरुक्।

1.1.37.2.8 तसिलादिः तद्धितः एधाच्पर्यन्तः । शस्तसी कृत्वसुच् सुच् आस्थालौ च्व्यर्थाः। च [अम् आम्] प्रतान् प्रशान्। स्वरादिः।

1.1.37.2.9 निपाताः वक्ष्यन्ते [प्राक् रीश्वरात् निपाताः] इति। च वा ह अह एव एवम् इत्यादयः|

1.1.37.3 अव्ययप्रदेशाः अव्ययात् आप्सुपः इति एवमादयः।

1.1.37.4 अव्ययम् इति अन्वर्थसञ्ज्ञा । सदृशम् त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु वचनेषु च सर्वेषु यत् न व्येति तत् अव्ययम्।

**तद्धितः च असर्वविभक्तिः। (1.1.38/448)**

1.1.38.1 तद्धितान्तः शब्दः असर्वविभक्तिः अव्ययसञ्ज्ञः भवति। [यस्मात् न सर्वविभक्तेः उत्पत्तिः सः असर्वविभक्तिः।]

1.1.38.2 ततः यतः तत्र यत्र तदा यदा सर्वदा सदा।

1.1.38.3 तद्धितः इति किम्। एकः द्वौ बहवः। असर्वविभक्तिः इति किम्। औपगवः औपगवौ औपगवाः।

**कृत् मेजन्तः। (1.1.39/449)**

1.1.39.1 कृत् यः मकारान्तः एजन्तः च तदन्तम् शब्दरूपम् अव्ययसञ्ज्ञम् भवति।

1.1.39.2 स्वादुङ्कारम् भुङ्क्ते | [सम्पन्नङ्कारम् भुङ्क्ते |] लवणङ्कारम् भुङ्क्ते। एजन्तः वक्षे रायः | ता वाम् एषे रथानाम् क्रत्वे दक्षाय जीवसे ज्योक् च सूर्यम् दृशे। वक्षे इति वचेः तुमर्थे सेसेनसे इति सेप्रत्यये कुत्वे षत्वे च कृते

रूपम् । एषे इति इणः सेप्रत्यये गुणे षत्वे च कृते रूपम् । जीवसे इति जीवेः असेप्रत्यये रूपम् । दृशे इति दृशेः केन्प्रत्ययः निपात्यते दृशे विख्ये च इति ।
1.1.39.3 अन्तग्रहणम् औपदेशिकप्रतिपत्त्यर्थम् । इह मा भूत् आधये [चिकीर्षवे[ कुम्भकारेभ्यः इति ।

**क्त्वातोसुन्कसुनः । (1.1.40/450)**

1.1.40.1 क्त्वा तोसुन् कसुन् इति एवमन्तम् शब्दरूपम् अव्ययसञ्ज्ञम् भवति ।

1.1.40.2 कृत्वा । हृत्वा । तोसुन् पुरा सूर्यस्य उदेतो आधेय पुरा वत्सानाम् अपाकर्त्तोः । भावलक्षणे स्थेण्कृञ्वदि इति इणः कृञः च तोसुन्प्रत्ययः । कसुन् सृपितृदोः कसुन् पुरा क्रूरस्य विसृपः विरप्शिन् । पुरा जत्रुभ्यः आतृदः ।

**अव्ययीभावः च । (1.1.41/452)**

1.1.41.1 अव्ययीभावसमासः अव्ययसञ्ज्ञः भवति । किम् प्रयोजनम् । लुङ्मुखस्वरोपचाराः ।

1.1.41.2 लुक् – उपाग्नि प्रत्यग्नि शलभाः पतन्ति । मुखस्वरः उपाग्निमुखः प्रत्यग्निमुखः । मुखम् स्वाङ्गम् इति उत्तरपदान्तोदात्तत्वम् प्राप्तम् न अव्ययदिक्शब्द इति प्रतिषिध्यते । तस्मिन् प्रतिषिद्धे पूर्वपदप्रकृतिस्वरः एव भवति । उपचारः उपपयःकारः उपपयःकामः । विसर्जनीयस्थानिकस्य सकारस्य उपचारः इति सञ्ज्ञा । तत्र अव्ययीभावस्य अव्ययत्वे अतः कुकमिकंसकुम्भपात्रकुशाकर्णीषु अनव्ययस्य इति पर्युदासः सिद्धः भवति ।

1.1.41.3 सर्वम् इदम् काण्डम् स्वरादौ अपि पठ्यते । पुनर्वचनम् अनित्यत्वज्ञापनार्थम् । तेन अयम् [कार्यनियमः] सिद्धः भवति । [इह च पुरा सूर्यस्य उदेतोः आधेयः पुरा क्रूरस्य विसृपः विरप्शिन् इति न लोकाव्ययनिष्ठाखलर्थतृनाम् इति षष्ठीप्रतिषेधः न भवति ।]

**शि सर्वनामस्थानम् । (1.1.42/313)**

1.1.42.1 शि इति एतत् सर्वनामस्थानसञ्ज्ञम् भवति । किम् इदम् शि इति । जश्शसोः शिः इति शिः आदेशः|

1.1.42.2 [कुण्डानि तिष्ठन्ति ।] कुण्डानि पश्य । दधीनि । मधूनि । त्रपूणि । जतूनि ।

1.1.42.3 सर्वनामस्थानप्रदेशाः सर्वनामस्थाने च असम्बुद्धौ इति एवमादयः ।

**सुट् अनपुंसकस्य । (1.1.43/229)**

1.1.43.1 सुट् इति पञ्च वचनानि सर्वनामस्थानसञ्ज्ञानि भवन्ति नपुंसकात् अन्यत्र । नपुंसके न विधिः न प्रतिषेधः । तेन [जसः शेः सर्वनामस्थानसञ्ज्ञा पूर्वेण भवति एव ।]

1.1.43.2 राजा राजानौ राजानः । राजानम् राजानौ ।

1.1.43.3 सुट् इति किम् । राज्ञः पश्य । अनपुंसकस्य इति किम् । सामनी वेमनी ।

**न वा इति विभाषा । (1.1.44/24)**

1.1.44.1 न इति प्रतिषेधः वा इति विकल्पः । तयोः [प्रतिषेधविकल्पयोः] विभाषा इति सञ्ज्ञा भवति । इतिकरणः अर्थनिर्देशार्थः । विभाषाप्रदेशेषु प्रतिषेधविकल्पौ उपतिष्ठेते । तत्र [प्रतिषेधेन] समीकृते विषये [पश्चात् विकल्पः] प्रवर्तते । उभयत्रविभाषाः प्रयोजयन्ति ।

1.1.44.2 विभाषा श्वेः – शुशाव शिश्वाय । शुशुवतुः शुश्वियतुः ।

1.1.44.3 विभाषाप्रदेशाः विभाषा श्वेः इति एवमादयः ।

**इक् यणः सम्प्रसारणम् । (1.1.45/328)**

1.1.45.1 इक् यः यणः स्थाने भूतः [भावी] वा तस्य [संप्रसारणम्] इति एषा [सञ्ज्ञा] भवति ।

1.1.45.2 यज् इष्टम् । वप् उप्तम् । ग्रह गृहीतम् ।

1.1.45.3 केचित् उभयथा सूत्रम् इदम् व्याचक्षते वाक्यार्थः सञ्ज्ञी वर्णः च इति । [इक् यणः] यः वाक्यार्थः स्थान्यादेशसम्बन्धलक्षणः सः सम्प्रसारणसञ्ज्ञः भवति यण्स्थानिकः इग्वर्णः सः सम्प्रसारणसञ्ज्ञः भवति इति । तत्र विधौ वाक्यार्थः उपतिष्ठते [ष्यङः सम्प्रसारणम्] पुत्रपत्योः तत्पुरुषे वसोः सम्प्रसारणम् इति । अनुवादे वर्णः [सम्प्रसारणात्] च इति ।

1.1.45.4 [सङ्ख्यातानुदेशात्] इह न भवति अदुहितराम् इति । द्युभ्याम् इति अत्र दिवः उत् इति तपरकरणात् दीर्घः न भवति ।

1.1.45.5 सम्प्रसारणप्रदेशाः वसोः सम्प्रसारणम् इति एवमादयः ।

**आद्यन्तौ टकितौ । (1.1.46/36)**

1.1.46.1 आदिः टित् भवति अन्तः कित् भवति षष्ठीनिर्दिष्टस्य ।

1.1.46.2 लविता । मुण्डः भीषयते ।

1.1.46.3 टित्प्रदेशाः आर्धधातुकस्य इट् वलादेः इति एवमादयः । कित्प्रदेशाः भियः हेतुभये षुक् इति एवमादयः ।

**मित् अचः अन्त्यात् परः । (1.1.47/37)**

1.1.47.1 अचः इति निर्धारणे षष्ठी जातौ च इदम् एकवचनम् । अचाम् [सन्निविष्टानाम् अन्त्यात् अचः परः मित् भवति ।] स्थानेयोगप्रत्ययपरत्वस्य अयम् अपवादः ।

1.1.47.2 विरुणद्धि । मुञ्चति । पयांसि ।

1.1.47.3 मित्प्रदेशाः रुधादिभ्यः श्नम् इति एवमादयः ।

1.1.47.4 मस्जेः अन्त्यात् पूर्वम् नुमम् इच्छन्ति अनुषङ्गसंयोगादिलोपार्थम् | मग्नः | मग्नवान् | मङ्क्ता | मङ्क्तुम् ।

**एचः इक् ह्रस्वादेशे । (1.1.48/323)**

1.1.48.1 [एचः ह्रस्वादेशे कर्तव्ये इक् एव ह्रस्वः भवति न अन्यः ।]

1.1.48.2 रै अतिरि | नौ अतिनु | गो उपगु ।

1.1.48.3 एचः इति किम् । [अतिखट्वः] | अतिमालः । ह्रस्वादेशे इति किम् । [दे३वदत्त । देवदइत्त] ।

**षष्ठी स्थानेयोगा । (1.1.49/38)**

1.1.49.1 परिभाषा इयम् [योगनियमार्था] । इह शास्त्रे या षष्ठी अनियतयोगा श्रूयते सा स्थानेयोगा एव भवति न अन्ययोगा । स्थानेयोगस्य [निमित्तभूते] सति सा प्रतिपत्तव्या । [स्थानशब्दः च प्रसङ्गवाची ।]

1.1.49.2 यथा [दर्भाणाम् स्थाने शरैः प्रस्तरितव्यम् इति दर्भाणाम् प्रसङ्गे] इति गम्यते एवम् इह अपि अस्तेः स्थाने प्रसङ्गे भूः भवति । भविता । भवितुम् । भवितव्यम् । ब्रुवः प्रसङ्गे वचिः भवति । वक्ता । वक्तुम् । वक्तव्यम् । प्रसङ्गे सम्बन्धस्य निमित्तभूते ब्रुवः इति षष्ठी ।

1.1.49.3 बहवः हि षष्ठ्यर्थाः [स्वस्वाम्य]नन्तर[समीप]समूहविकारा[वयवा]द्याः । तत्र [यावन्तः शब्दे सम्भवन्ति] तेषु सर्वेषु प्राप्तेषु नियमः क्रियते षष्ठी स्थानेयोगा इति । स्थाने योगः अस्याः इति व्यधिकरणः बहुव्रीहिः । अतः एव निपातनात् च सप्तम्याः अलुक् ।

**स्थाने अन्तरतमः । (1.1.50/39)**

1.1.50.1 स्थाने [प्राप्यमाणानाम् अन्तरतमः] आदेशः भवति सदृशतमः । कुतः च शब्दस्य आन्तर्यम् । स्थानार्थगुणप्रमाणतः ।

1.1.50.2 स्थानतः अकः सवर्णे दीर्घः दण्डाग्रम् । यूपाग्रम् । द्वयोः अकारयोः कण्ठ्यः एव दीर्घः आकारः भवति । अर्थतः वतण्डी च असौ युवतिः च [वातण्ड्ययुवतिः ।] पुंवद्भावेन अन्तरतमः पुंशब्दः अतिदिश्यते । गुणतः पाकः । त्यागः । रागः । चजोः कु घिण्ण्यतोः इति [चकारस्य अल्पप्राणस्य अघोषस्य तादृशः एव ककारः भवति ।] जकारस्य घोषवतः अल्पप्राणस्य तादृशः एव गकारः । प्रमाणतः अमुष्मै । अमूभ्याम् । अदसः असेः दात् उ दः मः इति ह्रस्वस्य ह्रस्वः दीर्घस्य दीर्घः ।

1.1.50.3 [स्थाने] इति वर्तमाने पुनः स्थानेग्रहणम् किम् । [ यत्र अनेकम् आन्तर्यम् सम्भवति तत्र स्थानतः एव आन्तर्यम् बलीयः यथा स्यात् ।] चेता स्तोता । प्रमाणतः अकारः गुणः प्राप्तः तत्र स्थानतः आन्तर्यात् एकारौकारौ भवतः ।

1.1.50.4 तमब्ग्रहणम् किम् । वाग् घसति । [त्रिष्टुब् भसति ।] झयः हः अन्यतरस्याम् [इति हकारस्य] पूर्वसवर्णे क्रियमाणे [सोष्मणः सोष्माणः इति] द्वितीयाः प्रसक्ताः [नादवतः नादवन्तः] इति तृतीयाः तमब्ग्रहणात् ये सोष्माणः नादवन्तः च ते भवन्ति चतुर्थाः ।

**उः अण् रपरः । (1.1.51/70)**

1.1.51.1 उः स्थाने अण् प्रसज्यमानः एव [रपरः वेदितव्यः ।]

1.1.51.2 कर्ता । हर्ता । किरति । गिरति । द्वैमातुरः । त्रैमातुरः ।

1.1.51.3 उः इति किम् । [खेयम्] । गेयम् । अण्ग्रहणम् किम् । [सुधातुः अकङ् च सौधातकिः ।]

**अलः अन्त्यस्य । (1.1.52/42)**

1.1.52.1 षष्ठीनिर्दिष्टस्य [यः उच्यते आदेशः सः अन्त्यस्य अलः स्थाने वेदितव्यः ।]

1.1.52.2 इत् गोण्याः पञ्चगोणिः । दशगोणिः ।

**ङित् च । (1.1.53/43)**

1.1.53.1 ङित् च यः आदेशः सः अनेकाल् अपि अलः अन्त्यस्य स्थाने भवति ।

1.1.53.2 आनङ् ऋतः द्वन्द्वे [होतापोतारौ । मातापितरौ ।]

1.1.53.3 तातङि [ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वात् सर्वादेशः तातङ् भवति] जीवतात् भवान् । जीवतात् त्वम् ।

**आदेः परस्य । (1.1.54/44)**

1.1.54.1 परस्य कार्यम् शिष्यमाणम् आदेः अलः प्रत्येतव्यम् । क्व च परस्य कार्यम् शिष्यते । यत्र [पञ्चमीनिर्देशः ।]

1.1.54.2 तत् यथा ईत् आसः [आसीनः] यजते । द्व्यन्तरुपसर्गेभ्यः अपः ईत् [द्वीपम् ।] अन्तरीपम् । प्रतीपम् । समीपम् ।

**अनेकाल्शित् सर्वस्य । (1.1.55/45)**

1.1.55.1 [अनेकाल् यः आदेशः शित् च सः सर्वस्य] षष्ठीनिर्दिष्टस्य स्थाने भवति ।

1.1.55.2 [अस्तेः भूः] भविता । भवितुम् । भवितव्यम् । शित् खलु अपि जश्शसोः शिः कुण्डानि तिष्ठन्ति । कुण्डानि पश्य ।

**स्थानिवत् आदेशः अनल्विधौ। (1.1.56/49)**

1.1.56.1 स्थान्यादेशयोः पृथक्त्वात् स्थान्याश्रयम् कार्यम् आदेशे न प्राप्नोति इति अयम् अतिदेशः आरभ्यते। स्थानिना तुल्यम् वर्तते इति स्थानिवत्। स्थानिवत् आदेशः भवति स्थान्याश्रयेषु कार्येषु [अनलाश्रयेषु स्थान्यलाश्रयाणि] कार्याणि वर्जयित्वा। न अल्विधिः अनल्विधिः इति अर्थः।

1.1.56.2 किम् उदाहरणम्। [धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः।]

1.1.56.2 .1 धात्वादेशः धातुवत् भवति | अस्तेः भूः| ब्रुवः वचिः। [आर्धधातुकविषये प्राक् एव आदेशेषु कृतेषु धातोः इति तव्यादयः भवन्ति |] भविता | भवितुम् | भवितव्यम् | वक्ता। वक्तुम्। वक्तव्यम्।

1.1.56.2.2 अङ्गादेशः अङ्गवत् भवति। केन। काभ्याम्। कैः। किमः कः इति कादेशे कृते अङ्गाश्रयाः इनदीर्घत्वैस्भावाः भवन्ति। कृदादेशः कृद्वत् भवति प्रकृत्य। प्रहृत्य। क्त्वः ल्यबादेशे कृते ह्रस्वस्य पिति कृति तुक् इति तुक् भवति।

1.1.56.2 .3 तद्धितादेशः तद्धितवत् भवति। दाधिकम्। अद्यतनम्। कृत्तद्धितसमासाः च इति प्रातिपदिकसञ्ज्ञा भवति।

1.1.56.2 .4 अव्ययादेशः अव्ययवत् भवति। प्रस्तुत्य। प्रहृत्य। उपहृत्य। उपस्तुत्य। अव्ययात् आप्सुपः इति सुब्लुक् भवति।

1.1.56.2 .5 सुबादेशः सुब्वत् भवति। वृक्षाय। प्लक्षाय। सुपि च इति दीर्घत्वम् भवति।

1.1.56.2.6 तिङादेशः तिङ्वत् भवति। अकुरुताम् अकुरुतम्। सुप्तिङन्तम् पदम् इति पदसञ्ज्ञा भवति।

1.1.56.2.7 पदादेशः पदवत् भवति। ग्रामः वः स्वम्। जनपदः नः स्वम्। पदस्य इति रुत्वम् भवति।

1.1.56.3 वत्करणम् किम् । स्थानी [आदेशस्य सञ्ज्ञा मा विज्ञायि इति ।] स्वाश्रयम् अपि यथा स्यात् । आङः यमहनः आहत आवधिष्ट इति आत्मनेपदम् [उभयत्र] अपि भवति । [आदेशग्रहणम्] किम् । आनुमानिकस्य [अपि आदेशस्य स्थानिवद्भावः यथा स्यात् पचतु एरुः ।] अनल्विधौ इति किम् । द्युपथितदादेशाः न स्थानिवत् भवन्ति द्यौः पन्थाः सः इति हल्ङ्याब्भ्यः दीर्घात् सुतिस्यपृक्तम् हल् इति सुलोपः न भवति ।

**अचः परस्मिन् पूर्वविधौ । (1.1.57/50)**

1.1.57.1 पूर्वेण अनल्विधौ स्थानिवद्भावः उक्तः । [अल्विध्यर्थम् इदम्] आरभ्यते । आदेशः स्थानिवत् इति वर्तते । अचः इति स्थानिनिर्देशः । परस्मिन् इति निमित्तसप्तमी । पूर्वविधौ इति विषयसप्तमी | अजादेशः [परनिमित्तकः पूर्वविधौ कर्तव्ये स्थानिवत् भवति ।]

1.1.57.2 [पटयति । अवधीत् । बहुखट्वकः ।] पटुम् आचष्टे इति णिचि टिलोपे कृते तस्य स्थानिवद्भावात् अतः उपधायाः इति वृद्धिः न भवति । अवधीत् अतः लोपस्य स्थानिवद्भावात् अतः हलादेः लघोः इति हलन्तलक्षणा वृद्धिः न भवति । बहुखट्वकः इति आपः अन्यतरस्याम् इति ह्रस्वस्य स्थानिवद्भावात् ह्रस्वान्ते अन्त्यात् पूर्वम् इति स्वरः न भवति ।

1.1.57.3.1 अचः इति किम् । प्रश्नः । आक्राष्टाम् । आगत्य । प्रश्नः इति [प्रच्छेः नङ्प्रत्यये छ्वोः शूट् अनुनासिके च इति छकारस्य शकारः] परनिमित्तकः [तुकि कर्तव्ये न स्थानिवत् भवति ।] आक्राष्टाम् इति झलः झलि इति सिचः लोपः परनिमित्तकः कृषेः षकारस्य षढः कः सि इति ककारे कर्तव्ये न स्थानिवत् भवति । आगत्य इति वा ल्यपि इति अनुनासिकलोपः परनिमित्तकः तुकि कर्तव्ये न स्थानिवत् भवति ।

1.1.57.3.2 [परस्मिन्] इति किम् । युवजानिः । वधूटीजानिः । वैयाघ्रपद्यः । आदीध्ये । युवजानिः इति जायायाः निङ् न परनिमित्तकः । तेन यलोपे न स्थानिवत् भवति । वैयाघ्रपद्यः इति न परनिमित्तकः पादस्य अन्तलोपः पद्भावम् न प्रतिबध्नाति । आदीध्ये इति दीधीङः उत्तमपुरुषैकवचने टेरेत्वस्य अपरनिमित्तकत्वात् यीवर्णयोः दीधीवेव्योः इति लोपः न भवति ।

1.1.57.3.3 पूर्वविधौ इति किम् । [हे गौः] । बाभ्रवीयाः । नैधेयः । हे गौः इति वृद्धिः अजादेशः सम्बुद्धिलोपे कर्तव्ये न स्थानिवत् भवति । बाभ्रवीयाः इति बाभ्रव्यस्य आमी छात्राः इति वृद्धात् छः इति छः । हलः तद्धितस्य इति यकारलोपे कर्तव्ये अवादेशः न स्थानिवत् भवति । नैधेयः । आतः लोपः इटि च इति आकारलोपः इतः च अनिञः इति द्व्यज्लक्षणे प्रत्ययविधौ न स्थानिवत् भवति ।

**न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वार-दीर्घजश्चर्विधिषु । (1.1.58/51)**

1.1.58.1 पूर्वेण अतिप्रसक्तः स्थानिवद्भावः [एतेषु] विधिषु प्रतिषिध्यते ।

1.1.58.2.1 पदान्तविधिम् प्रति अजादेशः न स्थानिवत् भवति । कौ स्तः । यौ स्तः । तानि सन्ति । यानि सन्ति । श्नसोः अल्लोपः क्ङिति सार्वधातुके इति परनिमित्तकः । सः पूर्वविधौ [आवादेशे यणादेशे च कर्तव्ये स्थानिवत् स्यात् ।] अस्मात् वचनात् न भवति ।

1.1.58.2.2 द्विर्वचनविधिः द्विर्वचनविधिम् प्रति न स्थानिवत् भवति । दध्यत्र । मध्वत्र । यणादेशः परनिमित्तकः । तस्य स्थानिवद्भावात् अनचि च इति धकारस्य द्विर्वचनम् न स्यात् । अस्मात् वचनात् भवति ।

1.1.58.2.3 वरेविधिः [वरे] यः अजादेशः सः पूर्वविधिम् प्रति न स्थानिवत् भवति । अप्सु यायावरः प्रवपेत पिण्डान् । यातेः यङन्तात् यः च यङः इति वरचि

कृते अतः लोपः परनिमित्तकः। तस्य स्थानिवत्त्वात् आतः लोपः इटि च इति आकारलोपः स्यात् अस्मात् वचनात् न भवति।

1.1.58.2.4 यलोपविधिः यलोपविधिम् प्रति अजादेशः न स्थानिवत् भवति। [कण्डूतिः]। कण्डूयतेः क्तिनि कृते अतः लोपः परनिमित्तकः लोपः व्योः वलि इति यलोपे स्थानिवत् स्यात् अस्मात् वचनात् न भवति।

1.1.58.2.5 स्वरविधिः स्वरविधिम् प्रति अजादेशः न स्थानिवत् भवति। चिकीर्षकः। जिहीर्षकः। ण्वुलि कृते अतः लोपः परनिमित्तकः लिति प्रत्ययात् पूर्वम् उदात्तम् इति स्वरे कर्तव्ये न स्थानिवत् भवति इति।

1.1.58.2.6 सवर्णविधिः सवर्णविधिम् प्रति अजादेशः न स्थानिवत् भवति। [शिण्ढि।] पिण्ढि। शिषेः पिषेः च लोण्मध्यमपुरुषैकवचने रुधादिभ्यः श्नम्। हित्वधित्वष्टुत्वजश्त्वेषु कृतेषु श्नसः अल्लोपः क्ङिति सार्वधातुके परनिमित्तकः अनुस्वारस्य ययि परसवर्णे कर्तव्ये न स्थानिवत् भवति।

1.1.58.2.7 अनुस्वारविधिः अनुस्वारविधिम् प्रति अजादेशः न स्थानिवत् भवति। शिंषन्ति। पिंषन्ति। नः च अपदान्तस्य झलि इति अनुस्वारे कर्तव्ये श्नसोः अल्लोपः न स्थानिवत् भवति।

1.1.58.2.8 दीर्घविधिः दीर्घविधिम् प्रति अजादेशः न स्थानिवत् भवति। प्रतिदीव्ना। प्रतिदीव्ने। प्रतिदिवन् इति एतस्य भस्य इति अधिकृत्य तृतीयैकवचने चतुर्थ्येकवचने च अल्लोपः अनः इति अकारलोपः परनिमित्तकः। तस्य स्थानिवद्भावात् [हलि च] इति दीर्घत्वम् न स्यात् न हि अयम् वकारः हल्परः इति। अस्मात् वचनात् भवति।

1.1.58.2.9 जश्विधिः जश्विधिम् प्रति अजादेशः न स्थानिवत् भवति। सग्धिः च मे सपीतिः च मे। बब्धाम् ते हरी धानाः। अदेः क्तिनि बहुलम् छन्दसि इति घस्लादेशः। घसिभसोः हलि च इति उपधालोपः। झलः झलि इति सकारलोपः। झषः तथोः धः अधः इति धत्वम्। उपधालोपस्य स्थानिवत्त्वात् झलाम् जश्

झशि इति घकारस्य जश्त्वम् न स्यात्। अस्मात् वचनात् भवति। समाना ग्धिः । समानस्य सभावः। सग्धिः। बब्धाम् इति : भसेः लोड्द्विवचने शपः श्लुः द्विर्वचनम् अभ्यासकार्यम् घसिभसोः हलि च इति उपधालोपः झलः झलि इति सकारलोपः झषः तथोः धः अधाः इति धत्वम्। उपधालोपस्य स्थानिवत्त्वात् झलाम् जश् झशि इति जश्त्वम् न स्यात्। अस्मात् वचनात् भवति।

1.1.58.2.10 चर्विधिः चर्विधिम् प्रति अजादेशः न स्थानिवत् भवति। जक्षतुः। जक्षुः। अक्षन् पितरः अमीमदन्त पितरः। लिड्द्विवचनबहुवचनयोः अदेः घस्लादेशः। गमहनजनखनघसाम् लोपः क्ङिति अनङि इति उपधालोपः द्विर्वचनम् अभ्यासकार्यम्। तत्र उपधालोपस्य स्थानिवत्त्वात् खरि च इति घकारस्य चर्त्वम् न स्यात्। अस्मात् वचनात् भवति। शासिवसिघसीनाम् च इति षत्वम्। अक्षन् इति : अदेः लुङ्बहुवचने घस्लादेशः च्लेः आगतस्य मन्त्रे घसह्वर इति लुक्। गमहनजनखनघसाम् लोपः क्ङिति अनङि इति उपधालोपः तस्य स्थानिवत्त्वात् खरि च इति चर्त्वम् न स्यात्। अस्मात् वचनात् भवति।

1.1.58.3 स्वरदीर्घयलोपेषु लोपाजादेशः न स्थानिवत् भवति। अन्यत्र स्थानिवत् एव। तेन [बहुखट्वकः किर्योः गिर्योः] वाय्वोः इति स्थानिवत्त्वात् स्वरदीर्घयलोपाः न भवन्ति।

**द्विर्वचने अचि। (1.1.59/2243)**

1.1.59.1 द्विर्वचननिमित्ते अचि [अजादेशः स्थानिवत् भवति द्विर्वचने एव कर्तव्ये। रूपातिदेशः च अयम्] नियतकालः। तेन कृते द्विर्वचने [पुनः आदेशरूपम् एव अवतिष्ठते।]

1.1.59.2.1 [आल्लोपोपधालोपणिलोपयणयवायावादेशाः प्रयोजनम्।] आल्लोपः पपतुः। [पपुः।] आतः लोपः इटि च इति आकारलोपे कृते तस्य स्थानिवद्भावात् एकाचः द्वे प्रथमस्य इति द्विर्वचनम् भवति।

1.1.59.2.2 उपधालोपः जघ्नतुः । जघ्नुः । गमहनजनखनघसाम् लोपः क्ङिति अनङि इति उपधालोपे कृते अनच्कत्वात् द्विर्वचनम् न स्यात् अस्मात् वचनात् भवति ।

1.1.59.2.3 णिलोपः [आटिटत् ।] अटतेः णिचि लुङि चङि णिलोपे कृते तस्य स्थानिवत्त्वात् [अजादेः द्वितीयस्य इति टिशब्दस्य द्विर्वचनम्] भवति ।

1.1.59.2.4 यण् चक्रतुः । चक्रुः । करोतेः अतुसि उसि च यणादेशे कृते अनच्कत्वात् द्विर्वचनम् न स्यात् स्थानिवत्त्वात् भवति ।

1.1.59.2.5 अयवायावादेशाः निनय निनाय । लुलव लुलाव । नयतेः लुनातेः च उत्तमे णलि गुणे कृते वृद्धौ च अयवायावादेशाः । तेषाम् स्थानिवत्त्वात् ने नै लो लौ इति द्विर्वचनम् भवति ।

1.1.59.3 द्विर्वचने कर्तव्ये इति किम् । [जग्ले मम्ले । श्रवणम् आकारस्य न भवति ।] द्विर्वचननिमित्ते इति किम् । दुद्यूषति । ऊठि यणादेशः न स्थानिवत् भवति । अचि इति किम् । जेघ्रीयते देध्मीयते । ईघ्राध्मोः यङि च इति ईकारादेशः तस्य स्थानिवद्भावात् आकारस्य द्विर्वचनम् स्यात् । अज्ग्रहणात् न भवति ।

**अदर्शनम् लोपः । (1.1.60/53)**

1.1.60.1 अदर्शनम् अश्रवणम् अनुच्चारणम् अनुपलब्धिः अभावः वर्णविनाशः इति अनर्थान्तरम् । एतैः शब्दैः यः अर्थः अभिधीयते तस्य लोपः इति इयम् सञ्ज्ञा भवति । अर्थस्य इयम् सञ्ज्ञा [न शब्दस्य ।] प्रसक्तस्य अदर्शनम् लोपसञ्ज्ञम् भवति ।

1.1.60.2 गोधायाः ढ्रक् गौधेरः । पचेरन् । जीवे रदानुक् जीरदानुः । स्रिवेः मनिन् आस्रेमाणम् । यकारवकारयोः अदर्शनम् इह उदाहरणम् । अपरस्य अनुबन्धादेः प्रसक्तस्य ।

1.1.60.3 लोपप्रदेशाः लोपः व्योः वलि इति एवमादयः ।

